॥ ॐ ॥

# तर्कसंग्रहः

## न्यायबोधिनी पदकृत्यसहितः ।



व्याकरणाचार्येण—

सच्चिदामप्रसाद शर्म्मणा संशोधितः




प्रकाशक—

मैनेजर—भार्गव पुस्तकालय,

चौक, बनारस सिटी ।

केवल आवरण पृष्ठ—

निज

७ प्रेस, त्रिलोचन—काशी में

कर प्रकाशित किया ।

॥ ॐ ॥

# तर्कसंग्रहः

## न्याय बोधिनी पदकृत्य सहितः

व्याकरणा चार्येण—

अम्बिकाप्रसाद शर्म्मणा

संशोधितः

प्रकाशक—
मैनेजर भार्गव पुस्तकालय,
चौक बनारस सिटी

मुद्रक—
बाबू सूर्य्यनारायणजी, जगन्नाथ प्रिंटिङ्ग वर्क्स,
राजघाट—काशी।

प्रथमावृत्ति २००० ] सन् १९२३ ई०। [

॥ श्री ॥

श्रीगणेशाय नमः ॥

# तर्कसंग्रहः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥

न्यायबोधिनी ।

निखिलागमसञ्चारि (१) श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्द्धनसुधीस्तनुते न्यायबोधिनीम् ॥१॥

चिकीर्षितस्य (२) ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति ( ३ )—निधायेति ॥

---

१ आगमसञ्चारित्वं नाम आगमप्रतिपाद्यत्वम् प्रतिपाद्यतासम्बन्धेनागमेषु विद्यमानत्वम् वा ॥

२ कर्तुमिच्छा चिकीर्षा तद्विषयीभूतस्य ग्रन्थस्येत्यर्थः ॥

३ प्रतिपाद्यतावच्छेदककोटिप्रवेशानुकूलो व्यापारो निपूर्वकबन्धधातोरर्थः ॥

४ ग्रन्थत इति सप्तम्यन्तात्तसिः । ग्रन्थे इत्यर्थः ॥

पदकृत्यम् ।

श्रीगणेशं नमस्कृत्य पार्वतीशङ्करं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥

विश्वेशं जगत्कर्त्तारं श्रीसाम्बमूर्तिं हृदि मनसि निधाय नितरां धारयित्वा गुरुवन्दनंच विधाय कृत्वा-इत्यर्थः ॥ बालेति ॥ अत्राधीतव्याकरणकाव्यकोशोऽनधीतन्यायशास्त्रो बालः । व्यासादावतिव्याप्तिवारणाय-'अनधीतन्याय' इति ॥ स्तनंधयेऽतिप्रसक्तिवारणाय-'अधीतव्याकरण इति ॥

"यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्माद्धितकरं वाक्यं प्रवक्तव्यं सता सदा ॥

सुखेति ॥ सुखेनानायासेन (१) बोधाय 'पदार्थतत्वज्ञा-

---

१ श्रोतृप्रवृत्यर्थं ग्रन्थादौ - विषयप्रयोजनाधिकारिसम्बन्ध-रूपान् चतुरोऽनुबन्धान् प्रदर्शयन् मूलं विवरणयति पदार्थतत्त्वज्ञानायेति ॥ तथा च पदार्थतत्त्वज्ञानमेव प्रयोजनं सूचितम् ॥ द्रव्यादिसप्तपदार्थाश्च विषयाः ॥ पदार्थतत्त्वावधारणमीप्सुरधिकारी ॥ सम्बन्धश्च विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः ॥ अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वम् ॥ परमस्य शास्त्रस्य मोक्ष एव प्रयोजनम् सचात्यन्तकीदुःखनिवृत्तिः ॥ दुःखानि च षडिन्द्रियाणि ॥ षड्विषयाः षड्बुद्धयः शरीरं सुखं दुःखञ्चेत्येकविंशति संख्याकानि ॥ एतेषां निवृत्तिक्रमश्चेत्थम् शास्त्रेण तत्त्वज्ञानं भवति तेन च मिथ्याज्ञानस्य नाशः ॥ ततोरागद्वे-

नाय' इत्यर्थः ॥ तर्क्यन्ते प्रमितिविषयीक्रियन्त इति तर्काः द्रव्यादिसप्त पदार्थाः, तेषां संग्रहः संक्षेपेणोद्देशलक्षणपरीक्षा यस्मिन् स ग्रन्थः ॥ नाममात्रेण वस्तुसङ्कीर्त्तनम् उद्देशः । यथा 'द्रव्यगुण—'इति ॥ असाधारणधर्मो (१) लक्षणम् । यथा—गन्धवत्वं पृथिव्याः । लक्षितस्य लक्षणं सम्भवति न वा' इति विचारः परीक्षा ॥ 'अत्रोद्देशस्य पक्षज्ञानं फलम् लक्षणस्य इतरभेदज्ञानम् ॥ परीक्षाया लक्षणदोषपरिहारः—इति मन्तव्यम् ।

पदार्थाः कति, कानिच तेषां नामानि

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः ।

( न्याय॰ ) अथ पदार्थान् विभजते (२)—'द्रव्य' इति अत्र सप्तग्रहणं 'पदार्थत्वं द्रव्याद्यन्यतमत्वव्याप्यम्' (३) इति व्याप्तिलाभाय ॥ ननु "शक्तिपदार्थस्याष्टमस्य विद्यमानत्वात् कथं 'सप्तैव' इति ॥ तथाहि ॥ वह्निसंयुक्तेन्धना-

---

त्वादिदोषाणां नाशः ॥ ततः प्रवृत्तेरनुत्पादः ॥ ततोजन्मानुत्पत्तिः ॥ ततोदुःखानुत्पाद इति ॥

१ असाधारणत्वञ्चान्यूनानतिरिक्तवृत्तित्वम् ।

२ द्रव्यादिसप्तान्यतमत्वंच द्रव्यादिभेदसप्तकाभाववत्वम् । प्रत्येक व्यक्तिप्रसिद्धानां द्रव्यादिभेदानां सप्तानां कुत्राप्य सत्वेन तादृशभेदसप्तकत्वाभावस्य सर्व्वत्र सत्वान्नदोष इति भावः

दौ सत्यपि मणिसंयोगे दाहो न जायते, तच्छून्ये तु जायते ॥ अतो 'मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यते' इति कल्प्यते॥ तस्माच्छक्तिरतिरिक्तः पदार्थः" इति चेत् न मणेः प्रतिबन्धकत्वेन (४) तदभावस्य (५) कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्ति तद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात् ॥ तस्मात् 'सप्तैव' पदार्था इति ॥

कति द्रव्याणि कानि च तानि

## तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।

( न्याय० ) द्रव्याणि विभजते—'पृथिवी' इति ॥ ननु "अन्धकारस्य दशमद्रव्यस्य सत्वात् कथं 'नवैव' इति ॥ तथाहि 'नीलं तमश्चलति' इति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । न च 'क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वम्' इति वाच्यम् आकाशादिपञ्चकस्य नीरूपत्वात्तमसो नीलरूपत्वाद्वायोरपि नीरूपत्वान्न तेष्वन्तर्भावः तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः सम्भवति, जलतेजसोः शीतोष्णस्पर्शवत्वान्न तयोरन्तर्भावः ॥ तस्मात्तमसो दशमद्रव्यत्वं सिद्धम्" इति चेत् न

४ प्रतिबन्धकत्वञ्च कार्य्यकार्य्यानुकूलशक्त्यन्यतरविघटकत्वमिति ॥ ५ प्रतिबन्धकाभावस्य ॥

तेजसोऽभावेनैवोपपत्तावतिरिक्तकल्पनायां मानाभावात् ॥ न च "विनिगमनाविरहात् (१) तेज एवान्धकाराभावस्वरूपम्" इति वाच्यम् तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शस्याश्रयत्वबाधात् द्रव्यान्तरकल्पने गौरवात् ॥ तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् । तमसि (२) नीलरूपप्रतीतिस्तु भ्रान्तिरेव दीपापसरणक्रियाया एव तत्र भानात् ॥

(पदकृत्य०) तत्रेति ॥ तत्र 'सप्तपदार्थमध्ये' इत्यर्थः ॥ द्रव्याणि नवैव इत्यन्वयः ॥ एवं 'तत्र' इति पदं 'चतुर्विंशति गुणाः' इत्यादिष्वप्यन्वेति ॥ द्रव्यत्वजातिमत्त्वं 'गुणवत्त्वं समवायिकारणत्वं' वा द्रव्यसामान्यलक्षणम् ॥

कति गुणाः के च त इति

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशति गुणाः ।

कियन्ति कर्माणि, कानि च तानीति

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ॥ परमपरं चेति द्विविधं सामान्यम् ॥

---

१ एकपक्षसाधकायुक्तिर्विनिगमना

( पद० ) परमपरं चेति ॥ परसामान्यम्, अपरसामान्यम् इत्यर्थः परत्वं चाधिकदेशवृत्तित्वम् ॥ अपरत्वं च न्यूनदेशवृत्तित्वम् ॥

विशेषस्य कति भेदा इति

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता (१) एव ॥**

समवायः कतिविधिः

**समवायस्त्वेक (२) एव ॥**

अभावस्य भेदः स्वरूपं च वक्तव्यम् वक्तव्यमिति प्रश्ने उत्तरम्

**अभावश्चतुर्विधः (३)। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावो ऽन्योन्याभावश्चेति ॥**

पृथिव्याः किं लक्षणं कति च भेदाः

**गन्धवती पृथ्वी। सा द्विधा—नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा—शरीरेन्द्रियविषयभेदात्।**

---

१ विशेषत्वं नाम स्वतोव्यावृत्तत्वम्। फलञ्च तस्य निरवयवद्रव्यभेदसिद्धिः ॥

२ समवायत्वं नाम नित्यत्वेसतिसम्बन्धत्वम्।

३ अभावत्वं नाम प्रतियोगिज्ञानाधीनज्ञानविषयत्वम् ॥ भावत्वञ्च समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्वम् ॥

**शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं (२) घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥**

(न्यायबो०) गन्धवतीति ॥ गन्धवत्त्वं (३) पृथिव्या लक्षणम् ॥ लक्ष्या पृथिवी ॥ पृथिवीत्वं लक्ष्यतावच्छेदकम् ॥ यद्धर्मावच्छिन्नं लक्ष्यं, स धर्मो लक्ष्यतावच्छेदकः ॥ यो धर्मो यस्या अवच्छेदकः सा तद्धर्मावच्छिन्ना ॥ तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना ॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलत्वादीनां लक्ष्यतावच्छेदकत्वं बोध्यम् ॥

(पद०) तदेव हि लक्षणम्, यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम् ॥ यथा गोःसास्नादिमत्त्वम् ॥ अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम् ॥ अत एव गोर्न कपिलत्वं लक्षणम्, तस्याव्याप्तिग्रस्तत्वात् ॥ अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् । अत एव गोर्न शृङ्गित्वं लक्षणम्, तस्यातिव्याप्तिग्रस्तत्वात् ॥ असम्भवश्च लक्ष्यमात्रावृत्तित्वम् ॥ अत एव गोरेकशफवत्त्वं न लक्षणम्, तस्यासम्भवग्रस्तत्वात् ॥ नित्येति ॥ ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम् ॥ ध्वंसेऽतिव्याप्तिवारणाय 'ध्वंसभिन्न' इत्यादि ॥ घटादावतिव्याप्तिवारणाय विशेष्यदलम् ॥ ध्वंसप्रतियोगि-

त्वं (१) प्रागभावप्रतियोगित्वं वाऽनित्यत्वम् ॥ (२) यन्नो· गायतनं तदेव शरीरम् , चेष्टाश्रयो वा ॥ इन्द्रियमिति ॥ चक्षुरादावतिव्याप्तिवारणाय 'गन्धग्राहकम्' इति ॥ का· लादावतिप्रसक्तिवारणाय 'इन्द्रियम्' इति ॥ विषय इति ॥ शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः शरीरा· दावतिव्याप्तिनिरासाय भिन्नान्तम् ॥ परमाण्वादावतिप्रस· क्तिवारणाय विशेष्यदलम् ॥ कालादिवारणाय 'जन्यत्वे सति' इत्येतदपि बोध्यम् ॥

जलस्य किं लक्षणम् कति च भेदाः

**शीतस्पर्शवत्य आपः । ता द्विविधाः—नित्या अनित्याश्च । नित्याः परमाणुरूपाः अनित्याः**

---

१ ध्वंसस्य ध्वंसाभावेन ध्वंसप्रतियोगित्वं ध्वंसे नास्ति इति तस्य अनित्यत्वं न स्यादतः प्रागभावेति=प्रागभावेऽपि प्रागभावप्रतियोगित्वं नास्तीति तत्राप्यनित्यत्वं नस्यादतो ध्वंस- प्रागभावान्यतरप्रतियोगित्वमनित्यत्वमिति लक्षणम् समीचीनम् ॥

२ आत्मनोभोगस्थानमित्यर्थः सुखदुःखान्यतरसाक्षात्कारा· वच्छेदकमिति यावत्=सुखादिसाक्षात्कारावच्छेदकत्वं देश· कालयोरपि तत्रापिशरीरत्वव्यवहारप्रसक्तिः स्यादत आह चेष्टाश्रयोवेति=चेष्टा हि हिताहितप्राप्तिपरिहारार्थः क्रियाविशेषः सचशरीरैकदेशे हस्तादावप्यस्त्यतोऽन्त्यावयवित्वेसतीत्यपि विशेषणं देयम्=अन्त्यावयवित्वञ्च द्रव्यान्तरानारम्भक द्रव्य· त्वमित्यर्थः ॥

कार्यरूपाःपुनस्त्रिविधाःशरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥

( पद० ) शीतेति तेजआदावतिव्याप्तिवारणाय 'शीत' इति । आकांक्षा ( १ ) वारणाय स्पर्श इति ॥ कालादावति ( २ ) प्रसक्तिवारणाय 'समवायसम्बन्धेन' इति पदं देयम् ॥ इन्द्रियमिति ॥ त्वगादावतिव्याप्तिवारणाय 'रसग्राहकम्' इतिरसनेन्द्रियम् ॥ रससन्निकर्षादावति ( ३ ) व्याप्तिनिरासाय 'इन्द्रियम्' इति ॥ सरिदिति आदिना तडागहिमकरकादीनां ( ४ ) संग्रहः ॥

तेजसः किं लक्षणं के च भेदाः

उष्णस्पर्शवत्तेजः । तद्द्विविधम्—नित्यमनित्यञ्च । नित्यम्परमाणुरूपम् । अनित्य कार्यरूपम् । पुनस्त्रिविधम्—शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः

( १ ) किंशीतं यद्वत्या आप इत्याकांक्षायाम् ॥

( २ ) आदिपदेन दिक्परिग्रहः ॥ दैशिकविशेषणतया देशे कालिकविशेषणतया काले जन्यपदार्थानां वृत्तित्वनियमादिति भावः ॥

कृष्णताराग्रवर्ति । विषयश्चतुर्विधः—भौमदिव्यौदर्याकरजभेदात् । भौमं वन्ह्यादिकम् । अबिन्धनं (१) दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ॥

(पदकृ०) उष्णेति ॥ जलादावतिव्याप्तिवारणाय 'उष्णः' इति ॥ कालादावतिव्याप्तिवारणाय 'समवायसम्बन्धेन' इति पदं देयम् ॥ इन्द्रियमिति ॥ घ्राणादावतिव्याप्तिवारणाय 'रूपग्राहकम्' इति ॥ काला (२) दावतिव्याप्ति, निरासाय 'इन्द्रियम्' इति ॥ 'भेदात्' इतिपदं प्रत्येकमभिसम्बन्ध्यते (३) भौमभिति ॥ आदिपदेन खद्योतगततेजः प्रभृतिपरिग्रहः ॥ विद्युदिति ॥ आदिना रविचन्द्रादि परिग्रहः ॥ भुक्तेति ॥ भुक्तस्यान्नादेःपरिणामो जीर्णता तस्य हेतुरुदर्यम्, इत्यर्थः । सुवर्णेति ॥ आदिना रजतादेः परिग्रहः ॥

---

१ आप इन्धनम् प्रकाशकं यस्य तदबिन्धनम्

२ कालादीनां जन्यवस्तुमात्रं प्रति कारणत्वे रूपादिग्राहकत्वमप्यस्तीति तत्रातिव्याप्तिः स्यादेवात इन्द्रियमिति ।

३ द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति नियमादिति भावः ।

वायोः किं लक्षणं केच भेदाः ।

रूपरहितस्पर्शवान् वायुः । स द्विविधः नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवृत्ति । विषयो वृक्षादिकम्पनहेतुः शरीरान्तः सञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ॥

( न्यायबो ) एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति—रूपरहितेति ॥ रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् ॥ सतिसप्तम्या विशिष्टार्थतया रूपरहितत्वविशिष्टस्पर्शवत्वं वायोर्लक्षणम् ॥ विशेषणानुपादाने स्पर्शवत्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः तत्रापि स्पर्शवत्वस्य सत्वादत उक्तं रूपरहितेति ॥ विशेष्यानुपादाने आकाशादिपञ्चकेऽतिव्याप्तिः, तत्रापि रूपरहितत्वस्य सत्वात् अतउक्तं स्पर्श इति ॥ अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्वम् ॥ यथा गोः शृङ्गित्वं लक्षणं कृतं चेत् लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिः तत्रापि शृङ्गित्वस्य विद्यमानत्वात् ॥ अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् ॥ यथा गोर्नील-

रूपवत्त्वं लक्षणं कृतं चेत् ॥ लक्ष्यतावच्छेदकाश्रयभूते श्वेतगवि (वे) नीलरूपत्वस्याभावात् अव्याप्तिः अ-सम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम् ॥ यथा—गोरेकशफत्वम् गोसामान्ये द्विशफत्वेन एकशफत्वाभावात् ॥ अतिव्याप्त्यव्याप्त्यसम्भवानां (प्रत्येकम्) निष्कृष्टलक्षणं च लक्ष्यता (१) वच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्' अति-व्याप्तिः ॥ अव्याप्तिस्तु (२) 'लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् ॥ असम्भवस्तु (३) 'लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ' इति ॥

(पदकृ० ) रूपेति ॥ घटादिवारणाय विशेषणम् ॥ आकाशादिवारणाय विशेष्यम् ॥ इन्द्रियमिति ॥ चक्षुरादिवारणाय 'स्पर्शग्राहकम्' इति ॥ कालादिवारणाय 'इन्द्रियम्' इति ॥ हस्तेति । आदिपदेन जलादीनां परिग्रहः ॥

१ यथा शृङ्गित्वरूपे लक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरण्यमपि गोत्वाच्छिन्नप्रतियोगिताको यो महिष्यादौ भेद-स्तत्समानाधिकरण्यमपीतिलक्षणसंगतिः ॥

२ एवंनीलरूपवत्त्वरूपे लक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरणश्वेतगोनिष्ठात्यन्ताभाव प्रतियोगित्वसत्त्वाल्लक्षणसंगतिः ॥

३ एवं हि एकशफत्वरूपे लक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरणात्यन्ताभाव प्रतियोगित्वमिति लक्षणसंगतिः ।

शरीरेति ॥ महावायुवारणाय विशेषणम् मनआदि वारणाय विशेष्यम् । धनञ्जय (१) वारणाय संचारी इति ॥ उपाधीति मुखनासिकाभ्यां निर्गमनप्रवेशनात् प्राणः ॥ जलादेरधोनयनाद् अपानः ॥ भुक्तपरिणामाय जाठरानलस्य समुन्नयनात् समानः अन्नादेरूर्ध्वनयनाद् उदानः नाडीमुखेषु विततनाद्व्यानः इति क्रियारूपोपाधि भेदात्तथा व्यवह्रियत इत्यर्थः ॥

आकाशस्य किं लक्षणं के च भेदाः

**शब्दगुण (२) कमाकाशम् । तच्चैकं विभुनित्यञ्च**

(न्यायबो०) आकाशं लक्षयति (३) शब्दगुणकम्, इति ॥ अत्रगुणपदं आकाशे शब्द एव विशेषगुणः इति द्योतनाय । न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य लक्षणत्वात् ॥ तदुक्तम्—

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादि भावनान्ताश्च शब्दो वैशेषिका गुणाः ॥" इति ॥

---

१ धनञ्जयस्य सर्वशरीरव्याप्तत्वेन सञ्चरणं नास्तीति भावः ॥

२ भट्टमते शब्दस्य द्रव्यत्वेन तन्निरासार्थं गुणपदमुपात्तमिति बोध्यम् ॥

३ असाधारणधर्मबोधमनुकूलोव्यापारोलक्षधातोरर्थः ।

तच्चैकमिति ॥ अनेकत्वे मानाभावादिति । विभ्विति ॥ सर्वमूर्तसंयोगित्वं विभुत्वम् ॥ मूर्तत्वं च क्रियाश्रयत्वम् ॥ पृथिव्यप्तेजोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ( १ ) ॥

( पदकृ० ) शब्देति ॥ शब्दो गुणो यस्य तत्तथा ॥ असम्भववारणाय शब्दपदमुन्नेयम् ॥ विभ्विति ॥ सर्वमूर्तद्रव्य ( २ ) संयोगित्वं विभुत्वम् ॥

कालस्य किं लक्षणं केचभेदाः—

**अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥**

( न्यायबो० ) कालं लक्षयति-अतीतेति ॥ व्यवहारहेतुत्वस्य लक्षणत्वे 'घटः' इति व्यवहार ( ३ ) हेतुभूतघटादावतिव्याप्तिवारणाय 'अतीतादि' इति विशेषणोपादानम् ॥

( पदकृ० ) अतीतेति ॥ अतीत आदिर्यो व्यवहारः 'अतीतःभविष्यद्वर्तमान ( १ ) इत्यात्मकः, तस्यासाधारणो

१ वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वमतीतत्वम् । वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वं भविष्यत्त्वम् ॥

हेतुः काल इत्यर्थः ॥ 'नन्विदं लक्षणम् आकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वात्' इति चेत् न अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात्' नचैवमपि कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम् ॥ विभुत्वस्यापि (२) निवेशात् ॥

दिशोलक्षणं भेदश्चोच्यतामिति प्रश्ने उत्तरम्—

'प्राच्यादिव्यवहारहेतु'र्दिक् । सा चैका नित्या विभ्वी च ॥

(न्यायबो०) दिशो लक्षणमाह-प्राचीति ॥ उदयाचलसंयुक्ता दिक् प्राची ॥ अस्ताचलसंयुक्ता दिक् प्रतीची ॥ मेरोः सन्निहिता दिग् उदीची—मेरोर्व्यवहिता दिग् दक्षिणा ॥

( पदकृ० ) प्राच्येति ॥ 'इयं प्राची' 'इयमवाची' इयं प्रतीची' 'इयमुदीची' ( ३ ) इत्यादि व्यवहारासाधारणं (कारणं) दिगित्यर्थः ॥ 'हेतुर्दिक्' इत्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात् 'तद्वारणाय, प्राच्यादिव्यवहारहेतुः' इति ॥ आकाशादि ( ४ ) वारणाय, असाधारण, इत्यपि बोध्यम् ।

---

१ भूतभविष्यद्भिन्नत्वम्वर्तमानत्वम् ।

२ तथाच विभुत्वे सत्यतीतादिव्यवहारासाधारणनिमित्तकारणत्व कालत्वमिति फलितोऽर्थः ॥

आत्मनो लक्षणं भेदश्च प्रतिपादयेति प्रश्ने उत्तरम्

ज्ञानाधिकरणमात्मा [ १ ] स द्विविधः—परमात्मा २ जीवात्मा चेति तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवः ३ प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥

( न्यायबो० ) आत्मानं निरूपयति—ज्ञानाधिकारण-मिति ॥ अत्राधिकरणपदं समवायेन ज्ञान ( ४ ) लाभार्थम् ॥

( पदकृति ) ज्ञानाधिकरणेति ॥ भूतलादिवारणाय 'ज्ञान' इति ॥ कालादिवारणाय ' समवायेन' इत्यपि देयम् ॥ ईश्वर इति ॥ समवायसम्बन्धेन नित्यज्ञानवान् ईश्वरः ॥ जीवेति ॥ सुखादिसमवायिकारणं जीवः ॥

---

१ मुक्तावस्थायां ज्ञानोत्पादकात्ममनःसंयोगाभावेन ज्ञाना-धिकरणत्वाभावात् मूलोक्तं लक्षणमसमतो ज्ञानसमाना-धिकरणद्रव्यविभाजकोपाधिमत्त्व मात्मनो लक्षणं बोध्यम्

२ जीवत्वं च समवायेन जन्यज्ञानाधिकरणत्वम् ॥

३ सुखादिभोगवैचित्र्यात् प्रतिशरीरं जीवभेदोऽनुमीयते इति भावः ॥

४ अन्यथा कालिकसम्बन्धेन कालेपि ज्ञानस्य सत्त्वेनाति-व्याप्तिः स्यादिति भावः ॥

मनसो लक्षणमुच्यतामिति प्रश्ने उत्तरम्

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणु (६) रूपं नित्यंच॥

( न्यायबो० ) मनो निरूपयति—सुखादीति ॥ उपलब्धिर्नाम साक्षात्कारः ॥ तथाच सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम् ॥ इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः पूर्वदलम् ॥ विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनो ज्ञानादिकं प्रति समवायिकारणत्वात् अत इन्द्रियत्वरूपविशेष्योपादानम् ॥

( पदकृ० ) सुखेति ॥ आत्ममनःसंयोगादि (१) वारणाय 'इन्द्रियम्' इति ॥ चक्षुरादिवारणाय 'सुख' इति ॥

रूपस्य लक्षणं भेदतिश्च कुत्र वर्तत इति प्रश्नेउत्तरम् ।

चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतहरितरक्तकपिशचित्रभेदात्सप्तविधम् ॥ पृथिव्यप्तेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि ॥

---

५ मध्यमपरिमाणत्वेऽनित्यत्वापत्तिः विभुत्वे च विभुद्वयसंयोगास्वीकारेणात्ममनःसंयोगरूपासमवायिकारणस्याभावाद्ज्ञानानुपपत्तिरत आह परमाणुरूपमिति ॥

[ न्यायबो० ] रूप लक्षयति चक्षुर्मात्रेति चक्षुर्मात्रग्राह्य-त्ववाशिष्टगुणत्ववत्त्वं रूपस्य लक्षणम् ॥ विशेष्यमात्रोपादाने रसादावतिव्याप्तिः,अतः 'चक्षुर्मात्रग्राह्य' इति विशेषणम् ॥ तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः 'यो गुणोयदिन्द्रियेण गृह्यते—तन्निष्ठा जातेरपि [ १ ] तदिन्द्रियेण गृह्यते' इति नियमात् अतस्तद्वारणाय विशेष्योपादानम् ॥ चक्षुर्मात्र-ग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् ॥ मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः' सख्या-दावपि चक्षुर्ग्राह्य [ त्व ] विशिष्टगुण [ त्व ] स्य सत्वात् अतस्तत्रातिव्याप्तिवारणाय मात्रपदम् ॥ संख्यादेश्चक्षुर्भिन्न-त्वग्ग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति ॥ अतीन्द्रिय गुरुत्वादावति-व्याप्तिवारणाय चक्षुर्ग्राह्येति ॥ अत्र लक्षणे ग्राह्यत्वं नाम लौकिक प्रत्यक्षविषयत्वम् ॥ अग्राह्यत्वंनाम तदविषयत्वम् ॥ तथा च त्वगिन्द्रियजन्यसाक्षात्काराविषयत्वे सति चक्षुर्जन्य-लौकिक (२) प्रत्यक्षविषयत्वेसति गुणत्वं इति फलितोऽर्थः ॥ ननु 'प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिः तस्य चक्षुर्मात्र

---

१ अपिनाऽभावसंग्रहः ॥

२ ज्ञातं रूपमिति प्रत्यक्ष उपनीतभावविषये ज्ञानेऽतिव्याप्ति-वारणाय लौकिकेति तथा च तादृशज्ञानप्रत्यक्षस्य चक्षुः—संयु-क्तमनः संयुक्तात्मसमवायरूपसन्निकर्षजन्यस्य षड्विध सन्नि-कर्षाजन्यत्वान्न दोषः ॥

ग्राह्यत्वात्' इति चेत् ॥ न गुणपदस्य विशेषगुणमात्रपरत्वात् नचैवं विशेषगुणघटितलक्षणे संख्यादावतिव्याप्त्यभावन्मात्रपदवैयर्थ्यम्' इति वाच्यम् ॥ जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात् ॥ अथवा [२] चक्षुर्मात्रग्राह्यजातिमद्गुण [त्व]स्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः, संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात्॥ घटसंयोगस्य त्वगिन्द्रियग्राह्यत्वतद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात्॥ अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिः तद्वारणाय तदुपादानम् ॥ एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणेऽतिव्याप्तिः विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः' अतो विशेषणविशेष्ययोरुपादानम् ॥

(पदकृ०)चक्षुर्मात्रेति ॥ रूपत्वादिवारणाय गुणपदम् ॥ रसादिवारणाय 'चक्षुर्ग्राह्य' इति । संख्यादिवारणाय मात्रपदम् ॥ यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणत्वस्य विवक्षणीयतया तत एव संख्यादिवारणं सम्भवति मात्रपदं व्यर्थम्, तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम् ॥ वस्तुतस्तु परमाणुरूपेऽव्याप्ति वारणाय चक्षुर्मात्रग्राह्यजातिमत्वस्य विवक्षणीयतया विशेषपदं न

२ एवमपि परमाणुरूपेऽव्याप्तिरत आह अथवेति

देयम् । द्व्यणुकादि ( १ ) वारणाय गुणपदं तु देयम् ॥ सप्तेति ॥ 'रूपम्' इत्यनुपज्यते ॥

रसस्य लक्षणं भेदश्च प्रदर्शनीयम् इति प्रश्नस्योत्तरम् ।

**रसनाग्राह्यो गुणो रसः । स च मधुराम्ल-लवणकटुकषायतिक्तभेदात्षड्विधः । पृथिवी-जलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ॥**

[ पदकृ० ] रसनेति ॥ रसत्वादिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'रसन' इति ॥ तत्रेति ॥ पृथिवीजलयोरित्यर्थः ॥ षड्विध इति ॥ अत्र 'रस' इत्यनुवर्तते ॥

गन्धस्य लक्षणं भेदश्च वाच्य मितिप्रश्ने उत्तरम् ।

**घ्राणग्राह्यो गुणो गन्धः स द्विविधः—सुरभिर सुरभिश्च पृथिवीमात्रवृत्तिः ॥**

( पदकृ० ) घ्राणेति ॥ गन्धत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवारणाय 'घ्राणग्राह्यः' इति ॥ पृथिवीति ॥ पृथिवीसम्बन्धसत्वे गन्धप्रतीतिसत्वं पृथिवीसम्बन्धाभावे गन्धप्रतीत्यभावः' इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव प्रतीतिर्जले बोध्या ननु 'देशान्तरस्थकस्तु-

१ आदिना

रीकुसुमसम्बन्धिपवनस्यैतद्देशे सत्वेपि पृथिवीसम्बन्धाभावा-द्गन्धप्रतीत्यनुपपत्तिः ॥ नच वायवानीतत्र्यणुकादिसम्बन्धोऽस्त्येव इति वाच्यम् ॥ कस्तूर्या न्यूनतापत्तेः कुसुमस्य सच्छिद्रत्वापत्तेः इति चेत् ॥ न ॥ भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तराद्युत्पत्तिः ॥ कर्पूरादौ तु तदभावान्न तथा ॥

स्पर्शं लक्षणं तद्भेदान् सच कुत्रवर्तत इति प्रदर्शयेति ।

त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रि-विधः—शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्ते-जोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ॥

(न्यायबो०) स्पर्शं लक्षयति—त्वगिन्द्रियेति ॥ अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय ॥ अन्यद्विशेषणकृत्यं पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपि पूर्ववदेव बोध्यः ॥

( पदकृ० ) त्वगिति ॥ स्पर्शत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवारणाय 'त्वगिन्द्रिय—इति ॥ संख्यादिवारणायमात्रपदम् ॥ तत्रेति ॥ पृथिव्यादिचतुष्टये ॥ शीत इति ॥ शीतस्पर्शः ॥ उष्णइति ॥ उष्णस्पर्शः

रूपरस गन्ध स्पर्शाः कुत्र पाकजाः कुत्र च अपाकजाः इति प्रश्ने उत्तरम्

**रूपादि चतुष्टयं पृथिव्यां पाकजमनित्यं च॥ अन्यत्रा (१) पाकजं नित्यमनित्यं च । नित्यगतं (२) नित्यम् । अनित्य (२) गतमनित्यम् ॥**

(न्यायबो०) रूपादीति ॥ एतत्तत्त्वनिर्णयश्चेत्थम् पाको नाम विजातीयतेजःसंयोगः ॥ स च नानाजातीयोरूपजनको विजातीयतेजःसंयोगः ॥ तदपेक्षया रसजनको विजातीयः ॥ एवं गन्धजनकोऽपिविजातीयः एवं स्पर्शजनकोऽपि तथा ॥ एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः ॥ तथाहि ॥ तृणपुञ्जनिक्षिप्तआम्रादा-

वस्तुतस्तु उद्बुद्धानुद्बुद्धभेदेन गन्धो द्विविधः तत्र कुसुमादौ भूतलावयवा उभय गन्धवन्तः अतएव यत्रद्वारा सारनिसृतनिःशेष कुसुम गन्धाभावोऽप्युपलभ्यते तथा च रजतापहारि सलिलसंयोगेन रजतपर्णोपरिभागस्थसूक्ष्मावयवापहरणवत् वेगशालिनावायुनापि कुसुमोपरि भागस्थसूक्ष्मावयवा अपकृष्यन्ते इति न सच्छिद्रत्वादि दोषापत्तिर्नाप्यदृष्टादि क्लिष्टकल्पना इति भावः॥

१ लौकिकप्रत्यक्षविषयवृत्तिरेव चक्षुरग्राह्यत्वगिन्द्रियग्राह्य गुणविभाजकोपाधिमत्त्वमिति फलितोऽर्थः ॥

१ सलिलादित्रिके रूपर सस्पर्शत्रिकमग्निसंयोगानुत्पन्नमित्यर्थः ॥

२ परमाणुगतम् ॥ कार्य्यगतम् ॥

वृष्मलक्षणविजातीयतेजःसंयोगात् पूर्वहरितरूपनाशे रूपान्तरस्य पीतादेरुत्पत्तिः नतु रसादेरुत्पत्तिः ॥ पूर्वरस्यैवाम्लस्यानुभवात् ॥ क्वचित्पूर्वहरितरूपस्य सत्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजःसंयोगविपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात् ॥ तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्य्यः ॥ एवं गन्धजनकोऽपि विलक्षण एव, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः ॥ एवं स्पर्शजनकोऽपि पाकवशात्कठिनस्पर्शनाशे मृदुस्पर्शानुभवात् ॥ तस्माद्रसादिजनका विजातीया एव पाकाः ॥ अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः ॥ यथा गोभुक्ततृणादीनामापरमाण्वन्वतभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजः संयोगात् पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते, तदुत्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते ॥ एतादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण दुग्धारम्भः इति ॥ एवं दुग्धारम्भकैःपरमाणुभिरेव दध्यारभ्यते पाकमहिम्ना ॥ एवं दध्यारम्भकैरेव परमाणुभिर्नवनीतारम्भ इति दिक् ॥

संख्यायाः किं लक्षणं कुत्र च वर्तत इति प्रश्ने उत्तरम्

**एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्य—**

वृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्य-मनित्यं च । नित्यगतं [१] नित्यम् । अनित्य [२] गतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्य [३] मेव ॥

[पदकृ०] एकादीति । 'एकत्वम् इत्यादिर्यो व्यवहारः अयमेकः इमौ द्वौ एते वहवः' इत्याद्यात्मकः । तस्य हेतुः संख्या, इत्यर्थः ॥ पटादिवारणाय 'एकादि' इति ॥ तथा च—

'एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥

(१) भूतलादि चतुर्णां परमाणवः आकाशादि पञ्च च नित्यास्तेषु गतमेकत्वमपि नित्यमिति भावः ॥

२ अनित्यत्वं च यावत् घटपटादिकार्यजातस्य ॥

३ अपेक्षाबुद्धिजन्यत्वादिति भावः ॥ समवायेन द्वित्वत्वा-वच्छिन्नं प्रति विशेष्यतासम्बन्धेनापेक्षाबुद्धेर्निमित्तकारणत्वम् असमवायिकारणं च समवायिकारणगतमेकत्वम् ॥ अपेक्षाबु-द्धित्वञ्चानेकैकत्वावगाहित्वम् ॥ तन्नाशादेव द्वित्वादीनां नाशः न च समवायिकारणनाशादसमवायिकारणनाशाद्वा कार्य्यनाश इति नियमविरोधः न नु समवायिकारणासमवायिकारणान्य-तर नाशादेव कार्य्यनाश इति नियमः किन्तु समवायिकारणा-समवायिकारणान्यतरनाशे कार्य्यनाशो भवत्येवेति नियमः तथाच कुत्रचित् द्वित्वादि स्थलेऽपेक्षाबुद्धिरूपनिमित्तकारण नाशादपि द्वित्वादिरूपकार्य्यनाशेन नियमविरोध इति भावः ॥

वृन्दं खर्वो निखर्वश्च शङ्खं पद्मश्च सागरः ।
अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥

इति महदुक्तेः परार्धपर्यन्तैव संख्या, इति भावः ॥

परिमाणस्य किं लक्षणं के च भेदा इति प्रश्ने उत्तरम्

मानव्यवहारासाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्-अणु महद्दीर्घं ह्रस्वं चेति ॥

( पदकृ० ) मानेति ॥ मानं परिमितिः' तस्य यो व्यवहारः 'इदमणु' इदं महत्' इत्याद्यात्मकः, तस्य कारणं परिमाणम्' इत्यर्थः ॥ दण्डादिवारणाय 'मान' इति ॥ कालादिवारणाय 'असाधारणं' इति ॥ शब्दत्ववारणाय 'कारणम् (१)' इति ॥ नवद्रव्येति ॥ चतुर्विधमपि परममध्यमभेदेन द्विविधम् ॥ तत्र परमाणुत्वह्रस्वत्वे च परमाणुमनसोः ॥ मध्यमाणुत्वह्रस्वत्वे द्व्यणुके ॥ परममहत्त्वदीर्घत्वे गगनादौ ॥ मध्यमहत्त्वदीर्घत्वे घटादौ ॥ 'एतन्मौक्तिकादेतन्मौक्तिकमणु' इति व्यवहारस्य निकृष्टमहत्त्वाद्गौणत्वं बोध्यम् ॥ एवमेव 'केतनाद्व्यजनं ह्रस्वम्' इत्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम् ॥

---

१ मानव्यवहारेति शब्दे शब्दत्वस्याप्यसाधारणधर्मत्वात्कारणेति पदमित्यर्थः ॥

पृथक्त्वस्य किं लक्षणं ।

पृथग्व्यवहारासाधारणकारणं पृथक्त्व । सर्वद्रव्यवृत्ति ॥

(पदकृ०) पृथगिति ॥ "अयमस्मात्पृथक् इति यो व्यवहारः तस्य कारणं पृथक्त्वम्, इत्यर्थः । दण्डादिवारणाय 'पृथक्' इत्यादि । कालादिवारणाय 'असाधारणं'-इति ॥ पृथग्व्यवहारत्ववारणाय 'कारणम्' इति ॥

संयोगस्य किं लक्षणम् -

संयुक्तव्यवहारहेतुः संयोगः । नवद्रव्यवृत्तिः ।

(पदकृ०) संयुक्तेति ॥ 'इमौ संयुक्तौ' इति यो व्यवहारस्तस्य हेतुः संयोगः, इत्यर्थः ॥ दण्डादि वारणाय 'संयुक्तव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इत्यपि देयम् । संयुक्तव्यवहारत्वेऽतिव्याप्तिवारणाय हेतुः (१) इति ॥ उपदर्शितलक्षणचतुष्टये 'असाधारण' पदं देयम् ॥ क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे 'असाधारण' पदं दृश्यते, 'तत्त्वाधुनिकैर्न्यस्तम्' इति बोध्यम् ॥

विभागस्य लक्षणं उच्यताम्

संयोगनाशको गुणो विभागः । नवद्रव्यवृत्तिः ।

१ संयुक्तव्यवहारासाधारणधर्मत्वं संयुक्तव्यवहारत्वस्यास्ति तद्वारणाय हेतुरिति पदमिति ॥

(न्याय०) विभागं लक्षयति-संयोगेति ॥ संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्॥ विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिवारणाय गुण[२]त्वविशेषणम् ॥

(पदकृ०) संयोगेति ॥ संयोगनाशजनक इत्यर्थः ॥ कालेऽतिप्रसक्तिनिवारणाय गुणपदम् ॥ ईश्वरेच्छादिवारणाय 'असाधारण' इत्यपि बोध्यम् ॥ ननु 'असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यात् इति चेत् न ॥ क्रियामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ॥

परत्वापरत्वयोर्लक्षणं भेदश्च वाच्यम्

परापरव्यवहारासाधारणकारणे परत्वापरत्वे । ते द्विविधे दिक्कृते कालकृते च दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् कनिष्ठे कालकृतमपरत्वम् ॥

---

२ क्रमश्चात्रेत्थं पूर्वं द्रव्ये क्रिया क्रियातो विभागस्ततः पूर्वसंयोगनाशो भवति ॥ तथा च संयोगनाशकत्वं क्रियाविभागयोरुभयोरपि सुवचं गुणपदप्रयोगे च क्रियाया गुणत्वाभावान्न दूषणम् साक्षात्पदोपादाने च गुणपदमनुपादेयमेवेति न दोषः ॥

* पृथिव्यादिचतुष्टयमनोवर्तिनीतिक्वचिदधिकः पाठः ।

( पदकृ० ) परेति ॥ 'परव्यवहारासाधारणं परत्वम् ॥ अपरव्यवहारासाधारणकारणम् अपरत्वम्' इत्यर्थः ॥ दण्डादि ( १ ) वारणाय 'परव्यवहार' इति कालादिवारणाय 'असाधारण' इति । परव्यवहारत्ववारणाय 'करण' ( २ ) इति ॥ एवमेव द्वितीयेऽपि बोध्यम् ॥

गुरुत्वस्य किं लक्षणम् ।

**आद्य ( ३ ) पतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।**

(न्यायबो०) गुरुत्वं लक्षयति—आद्येति ॥ द्वितीयपतनक्रियायां वेगस्यैवासमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय 'आद्य इति ॥ उत्तरलक्षणेऽप्याद्यविशेषणं पूर्ववद्योजनीयम् ॥

( पदकृ० ) आद्येति ॥ दण्डादि ( १ )वारणाय 'असमवायि' इति । रूपादिवारणाय 'पतन' ( २ ) इति ॥ वेगेऽतिव्याप्तिवारणाय 'आद्य' इति ॥

---

१ दण्ड इत्यभिवादनाख्यासाधारणकारणत्वं दण्डेऽप्यस्तीति भावः ॥

२परव्यवहारे असाधारणधर्मत्वं परव्यवहारत्वस्याप्यतो साधारणकारणेति ॥

३ आद्यत्वञ्चेह स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् द्वितीयादिपतनप्राथमिकपतनध्वंससमानकालिकत्वाचन्द्रव्युदास इति भावः ॥

द्रवत्वस्य किं लक्षणं तच्च कति विधम् कुत्र च कीदृशम्

स्यन्दना ( ३ ) समवायिकारणं द्रवत्वम् पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकं च । तत्र सांसिद्धि ( ४ ) कं जले नैमित्तिकं पृथिवीतेजसोः पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ

[ पदकृ० ] स्यन्दनेति । दण्डादि [ ५ ] वारणाय 'असमवायि' इति रसादिवार [६] णाय 'स्यन्दन, इति ॥

स्नेहस्य किं लक्षणं तच्च कुत्र वर्तत इत्यस्योत्तरम्

चूर्णादिपिण्डीभावहेतुर्गुणः । स्नेहः जलमात्रवृत्तिः ॥

---

१ आम्रादिपतनरूपायां क्रियायां बहुधा दण्डलोष्टादीनां निमित्त कारणत्वमतो समवायि इति ॥

२ घटादिरूपाद्यसमवायि कारणत्वं कपालादिगतरूपादीनामतःपतनेति पदम् ॥

३ स्यन्दनस्रवणरूपाक्रियाविशेषस्तदसमवायिकारणमित्यर्थं

४ सांसिद्धिकत्वं नाम निमित्तानपेक्षाधोदेशप्रसरत्वम् ॥

५ स्यन्दन प्रस्रवण तत्र निमित्त कारणता कुत्रचित् प्रतिरुद्ध सलिलस्थले दण्डस्यापि भवत्यतो समवायि इति पदमितिभाव

६ अवयविगतरसत्वाद्यवच्छिन्नं प्रत्यवयवगरसत्वाद्यवच्छिन्नस्य कारणत्वादिति भावः ॥

[ न्यायबो० ] स्नेहं लक्षयति—चूर्णादीति ॥ चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् ॥ पिण्डीभावो नाम चूर्णादिधारणाकर्षणहेतुभूतो विलक्षणसंयोगः ॥ तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वम् ॥ न तु जलादिगतद्रव्यत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादिपिण्डीभावापत्तेः ॥ अतः स्नेह एवासाधारण ( १ ) कारणम् ॥ विशेषणमात्रोपादाने कालादावतिव्याप्तिः, तद्वारणाय विशेष्योपादानम् ॥ वस्तु ( २ ) तस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम्, स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् ॥ जले द्रवत्वविशेषणात्करकादिव्यावृत्तिः ॥

( पदकृ० ) चूर्णादीति ॥ 'चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिः तस्य पिण्डीभावः संयोगविशेषः तस्य हेतुर्निमित्तकारणं स्नेहः, इत्यर्थः । कालादावतिव्याप्तिवारणाय गुणपदम् ॥ रूपादावतिव्याप्तिवारणाय 'पिण्डीभाव' इति चूर्णपदं स्पष्टा ( ३ ) र्थम् ॥

---

१ असाधारणं निमित्तकारणमित्यर्थः ॥

२ वस्तुतस्त्विति ग्रन्थेन स्नेहस्य मूलोक्तं लक्षणं व्याहतमतो ऽनायत्यास्नेहत्वजातियत्वमेव लक्षणं वाच्यमिति भावः ॥

३ लोहादिपिण्डीभावहेतुभूताग्निसंयोगव्यभिचारवारणाय चूर्णपदं न तु स्पष्टार्थमिति चिन्त्यम् ॥

शब्दस्य किं लक्षणं के च भेदाः

**श्रोत्रग्राह्यो गुणः 'शब्दः । आकाशमात्रवृत्तिः । स द्विविधः ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ [१] वर्णात्मकः संस्कृतभाषारूपः ।**

( न्यायबो० ) शब्दं लक्षयति-श्रोत्रग्राह्य इति । शब्दत्वेऽतिव्याप्तिवारणाय 'गुणः' इति ॥ स(२)त्रिविधःसंयोगजो विभागजः शब्दजश्चेति भेरीदण्डसंयोगजन्यो झांकारादिशब्दः, हस्तघातसंयोगादिजन्यो मृदङ्गादिशब्दः ॥वंशे पाट्यमाने दलद्वयविभागजन्यः पटपटादि शब्दः ॥ शब्दोत्पत्तिदेशमारभ्य कर्णविवरपर्यन्तं वीचीतरङ्ग न्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनसम्बन्धाच्छब्दधारा जायते तत्रोत्तरोत्तरशब्दे पूर्वं पूर्वशब्दः कारणम् ॥

---

१ भेर्यादिपदेन वेणुवीणादीनां संग्रहः ॥

२ स द्विविधोपि शब्दः संयोगजविभागजशब्दजभेदेन त्रिविधो भवति तत्र ध्वन्यात्मकस्य त्रिविधत्वं तु टीकाकारेण दर्शितम् वर्णात्मकस्य त्रिविधत्वञ्चेत्थं वायुकंठसंयोगेन ओष्ठद्वयविभागेन वीचीतरङ्गन्यायेन च त्रिविधत्वम् ॥ तत्र शब्दमात्रे समवायिकारणमाकाशम् ॥ असमवायिकारणञ्च यथाक्रमेण कण्ठाकाशसंयोगः ॥ ओष्ठाकाशविभागादिरिति ॥

[पदकृ०] श्रोत्रेति॥शब्दत्वेऽतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'श्रोत्रग्राह्यः' इति ॥ वस्तुवस्तु श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद् गुणपदमनुपादेयमेव ॥

बुद्धेः किं लक्षणं कश्चभेदः

## सर्वव्यवहार [१] हेतुर्गुणो बुद्धिर्ज्ञानम् [२] सा द्विविधा—स्मृतिरनुभवश्च ॥

( न्यायबो० ) बुद्धेर्लक्षणमाह—सर्वव्यवहारेति ॥ व्यवहारः शब्दप्रयोगः, ज्ञानं विना शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् ॥ बुद्धिं विभजते—स्मृतिरनुभवश्चेति ॥

( पदकृ० )बुद्धिलक्षणमाह—सर्वेति ॥ सर्वे ये व्यवहारा आहारविहारादयस्तेषां हेतुर्बुद्धिरित्यर्थः ॥ दण्डादिवारणाय 'सर्वव्यवहार' इति । कालादिवारणाय 'असाधारण'इत्यपि देयम् ॥

---

१ व्यवहारत्वावच्छिन्न कार्य्यतानिरूपितासाधारणकारणत्वं बुद्धित्वमिति निष्कर्षः ॥

२ लाघवेन लक्षणान्तरमाह ज्ञानमिति ॥ ज्ञानत्वजातिमत्वं बुद्धित्वमित्यर्थः ॥ लाघवञ्च शरीरकृतमुपस्थितिकृतं सम्बन्धकृतमिति त्रिविधमिति बोध्यम् प्रकृते चाद्यमेवेति ॥

स्मृतेः किं लक्षणम्

## संस्कारजन्यं ज्ञानं स्मृतिः [ १ ]

[ न्यायबो॰ ] स्मृतिं लक्षयति—(संस्कारेति ) ॥ संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् ॥ विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिः' तद्वारणाय विशेषणोपादानम् ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् ॥ ध्वंसे प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् ॥

( पदकृ॰ ) संस्कारेति ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय 'ज्ञानम्' इति । अनुभवेऽतिव्याप्तिवारणाय 'संस्कारजन्यम्' इति । तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम् ॥ क्वचित्तथैव पाठः नचैवं सत्यसम्भवः [२] ॥ तस्य [३] संस्कारजन्यत्वे सतीन्द्रियार्थसन्निकर्षाजन्यार्थत्वात् ॥

अनुभव लक्षणं तद्भेदश्चप्रदर्शनीयमिति प्रश्ने उत्तरम्

## तद्भिन्नं ज्ञानमनुभवः । स द्विविधःयथार्थोऽयथार्थश्च ॥

---

१ स्मृतित्वञ्च स्मरामीत्यनुभवसिद्धो जातिविशेष इति ॥

२ कार्य्यमात्रस्यादृष्टादिसाधारणकारणजन्यत्वेन संस्कारमात्रजन्यत्वं कस्यापि पदार्थस्य नास्तीति भावः ॥

३ मात्रपदस्य ॥

[ न्यायबो० ] अनुभवं लक्षयति-[तद्भिन्नमिति ] ॥ तद्भिन्नत्वं नाम स्मृतिभिन्नज्ञानत्वम् ॥ तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिः अतस्तद्वारणाय तयोरुपादानम् ॥ अनुभवं विभजते—स द्विविध इति ॥

(पदकृ० ) तदिति ॥ स्मृतित्वावच्छिन्नभिन्नमित्यर्थः॥ 'तेन, यत्किंचित्स्मृतिभिन्नत्वस्य स्मृतौ सत्वेपि न क्षतिः। घटादावतिव्याप्तिवारणाय, 'ज्ञानम्' इति ॥ स्मृतिवारणाय 'तद्भिन्नमिति,

यथार्थानुभवस्य प्रमाया वा लक्षणं निदर्शयतेति प्रश्ने उत्तरम्

**तद्वति ( १ ) तत्प्रकारकोऽनुभवो यथार्थःसैव (२) प्रमेत्युच्यते ॥**

(न्यायबो०) यथार्थानुभवं लक्षयति-तद्वतीति ॥ 'तद्वति' इत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः। तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं यथार्थानुभवस्य लक्षणम् ॥ उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानं रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्र-

१ यथाघटत्ववतिघटे घटत्वप्रकारकानुभवो यथार्थइत्यर्थः॥

२ ननु भाष्यादिप्राचीनग्रन्थेषु प्रमाभेदेन विभागोऽस्तीत्यत आह सैव प्रमेति ॥

कारकम् ॥ 'तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकार (१) ताशालित्वम्, इति निष्कर्षः ॥ अन्यथा यथाश्रुते, रङ्गरजतयोः 'इमे रजतरङ्गे' इत्याकारकसमूहा (२) वलम्बनभ्रमेऽतिव्याप्तिः ॥ तत्रापि रजतत्ववद्विशेष्यकत्व-रजतत्वप्रकारकत्वयो रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारत्वयोः सत्त्वात् । उक्तनिष्कर्षे तु दर्शितभ्रमे नातिव्याप्तिः समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाभावत्, एवं रङ्गत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावाच्चेति ॥

(पदकृ०) तद्वतीति ॥ तदेव प्रकारो यस्य स तथेत्यर्थः । तद्वद्विशेष्यकतत्प्रकारकः इति यावत् ॥ स्मृतिवारणाय 'अनुभवः' इति । अयथार्थानुभवनिरसनाय 'तद्वति' इति ॥ निर्विकल्पकेऽतिव्याप्तिवारणाय 'तत्प्रकारकः' इति ॥ यथा रजतत्वाभाववत्यां शुक्तौ रजतत्वप्रकारकानुभवोऽयथार्थ इत्यर्थः ॥

अयथार्थानुभवस्य लक्षणं प्रदर्शयतेति प्रश्ने, उत्तरम्

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः॥**

(न्यायबो०) अयथार्थानुभवं लक्षयति – तदभाववतीति ॥ अत्रापि पूर्ववत् तदभाववद्विशेष्यतानिरूपिततन्निष्ठ-

---

१ प्रकारतानिरूपितप्रकारिताशालिज्ञानत्वमिति फलितोऽर्थः॥

२ ज्ञाने समूहालम्बनत्वञ्च विशेष्यताद्वयावगाहित्वम् ॥

प्रकार(१)ताशालिज्ञानत्वं विचक्षणीयम् ॥ अन्यथा रङ्ग-रजतयोः 'इमे रङ्गरजते'इत्याकारकसमूहालम्बनप्रमायामति-व्याप्तिः । एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्य-कत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्र-कारकत्वयोश्च सत्वात् ॥ निष्कर्षे 'तु रजतांशे रजतत्वावगा-हित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रज-तत्वाभाववद्रङ्ग विशेष्यता निरूपितत्वाभावात्, एवं रङ्गत्वप्र-कारताया रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावात्, ना-तिव्याप्तिः ॥ उदाहरणम् यथा शुक्तौ 'इदं रजतम्' इति ॥

( पदकृ० ) तद्भाववतीति ॥ 'तदभाववद्विशेष्यकतत्प्र-कारकोऽनुभवो यथार्थानुभवः, इति ॥ यथा शुक्तौ 'इदं रजतम्, इति ज्ञानम् स्मृतिवारणाय 'अनुभवः, इति ॥ यथार्थानुभवनिरसनाय 'तदभाववति, इति ॥ निर्विकल्पक (२) वारणाय तत्प्रकारकः इति ॥

यथार्थानुभव भेदान प्रदर्शयतेति प्रश्ने, उत्तरम्

यथार्थानुभवश्चतुर्विध :—प्रत्यक्षानुमित्युप-मितिशाब्दभेदात ।

१ तन्निष्ठ प्रकारतानिरूपित प्रकारिताशाल्यनुभवत्वमिति फलितोऽर्थः ॥

२ निर्विकल्पकत्वञ्च प्रकारताद्यनवगाहिज्ञानत्वम् ॥

[न्यायबो०] यथार्थानुभवं विभजते-"चतुर्विधः" इति

[पदकृ०] यथार्थेति ॥ यथार्थानुभवः 'प्रत्यक्षमेव' इति चार्वाकाः, 'अनुमितिरपि' इति काणादबौद्धाः, 'उपमितिरपि' इति नैयायिकैकदेशिनः, 'शाब्दमपि' इति नैयायिकाः, 'अर्थापत्तिरपि' इति प्रभाकराः, 'अनुपलब्धिकोऽपि' इति भाट्टवेदान्तिनौ 'सांभविकैतिह्यकावपि' इति पौराणिकाः, चैष्टिकोऽपि, इति तान्त्रिकाः ॥ एतेषां मतेऽस्वरसं [ १ ] सम्भाव्य तस्य चातुर्विध्यं स्पष्टं दर्शितम् ॥

१ अस्वरसबीजन्तु अर्थापत्त्यादि प्रमाणानां पूर्वोक्तप्रत्य-क्षादिप्रमाणेष्वेवान्तर्भावसम्भवे पृथक् कल्पनमनर्थकमिति बोध्यम् ॥ तथाहि ॥ उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः ॥ उपपाद्यज्ञानं करणम् ॥ उपपादकज्ञानञ्च फलम् ॥ रात्रिभोज-नमन्तरेण दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृश पीनत्वमुपपाद्यम् ॥ रात्रिभोजनञ्चोपपादकम् ॥ अर्थस्या-पत्तिःकल्पना अर्थापत्तिः किम्वा अर्थस्यापत्तिः कल्पना यस्मादित्यर्थापत्तिशब्दः समासभेदेन फल करण योर्वाचक इति बोध्यम् तथाच पीनोदेवदत्तो दिवा न भुंक्ते इति दृष्टे श्रुते वा दिवाभुञ्जानस्य पीनत्वं रात्रि भोजनं विना ऽनुपपन्न-मित्यनुपपत्तिज्ञानं भवति इयमेवार्थापत्तिः ततो देवदत्तो रात्रिभोजी दिवाऽभुञ्जमानत्वे सति पीनत्वादिति केवलव्यतिरे-क्यनुमानेनैव सिद्धौ तस्या अकिञ्चित्करत्वादिति ॥ एवमभा-वप्रत्यक्षेऽप्यनुपलब्धिसहकृतेन्द्रियस्यैव कारणत्वेनानुपलब्धेः पृथक् प्रमाणत्वमकिञ्चित्करमिति ॥ एवं शते पञ्चाशदिति

